न्तरेणविशिष्टरूपत्वासिद्धेः, अविद्याश्रयाकार एव हि निरूप्यते, किञ्च बन्धमोक्षादिव्यवस्थासिद्ध्यर्थं हि जीवाज्ञानस्य समाश्रयणं सा तु व्यवस्था जीवाज्ञानपक्षेऽपि न सिध्यति, अविद्याविनाश एव हि मोक्षः, तत्रैकस्मिन्, मुक्ते अविद्याविनाशादितरेऽपि मुच्येरन्, अन्यस्याऽमुक्तत्वादविद्या तिष्ठतीति चेत् तर्ह्येकस्याप्यमुक्तिः स्यात् अविद्याया अविनष्टत्वात्. प्रतिजीवमविद्याभेदः कल्प्यते तत्र यस्याऽविद्या नष्टा स मोक्ष्यते, यस्य त्वनष्टा स भन्त्स्यत इति चेन्न प्रतिजीवमिति जीवभेदमाश्रित्य ब्रूषे स जीवभेदः किं स्वाभाविक ? उताविद्याकल्पितः ? न तावत्स्वाभाविकः अनभ्युपगमात्, भेदसिद्ध्यर्थस्यास्य चाविद्याकल्पनस्य व्यर्थत्वात्, अथाविद्याकल्पितः, तत्रेयं जीवभेदकल्पिकाऽविद्या किं ब्रह्मण ? उत जीवानां ? ब्रह्मण इति चेदागतोऽसि मदीयं मार्गम्, अथ जीवानां किमस्या जीवभेदक्लृप्तिसिद्ध्यर्थतां विस्मरसि अथ प्रतिजीवं बद्धमुक्तव्यवस्थासिद्ध्यर्थं या अविद्याः कल्प्यन्ते ताभिरेव जीवभेदोऽपीति मनुषे जीवभेदासिद्धा ताः सिध्यन्ति तासु सिद्धासु जीवभेदसिद्धिरितीतरेतराश्रयत्वं, न चात्र बीजाङ्कुरन्यायः सिद्ध्यति बीजाङ्कुरेषु ह्यन्यदन्यद्बीजमन्यस्या-

न्यस्याङ्कुरस्योत्पादकम्, इह तु याभिरविद्याभिर्ये जीवाः कल्प्यन्ते तानेवाश्रित्य तासां सिद्धिरित्यशङ्कनीयता। अथ बीजाङ्कुरन्यायेन पूर्वपूर्वजीवाश्रयाभिरविद्याभिरुत्तरोत्तरजीवकल्पनां मन्यसे तथा सति जीवानां भङ्गुरत्वमकृताभ्यागमकृतप्रहाणादिप्रसङ्गश्च, अत एव ब्रह्मणः पूर्वपूर्वजीवाश्रयाभिरविद्याभिरुत्तरोत्तरजीवभावकल्पन-मित्यपि निरस्तम्, अविद्याप्रवाहेऽभ्युपगम्यमाने तत्तत्कल्पितजीवभावस्यापि तद्वत्प्रवाहानादिता स्यात् न ध्रुवरूपता, आमोक्षं च जीवभावस्य ध्रुवत्वमिष्टं न सिद्ध्येत्, यच्चोक्तम् अविद्याया अवस्तुरूपत्वेनानुपपन्नैकवेषायां नेतरेतराश्रयत्वादयोवस्तुदोषा अनवक्लृप्तिमावहन्तीति, तथा सति मुक्तान् परं च ब्रह्माश्रयेदविद्या. शुद्धविद्यास्वरूपत्वादशुद्धिरूपा न तत्र प्रसजतीति चेत्किमुपपत्त्यनुवर्तिन्यऽविद्या! ? एवं तर्ह्युक्ताभिरुपपत्तिभिर्जीवानपि नाश्रयेत, किञ्च जीवाश्रयाया अविद्यायास्तत्त्वज्ञानोदयान्नाशे सति जीवो नश्येद्वा ? न वा ? यदि नश्येत्स्वरूपोच्छित्तिलक्षणो मोक्षः स्यात्, नोचेदविद्यानाशेप्यनिर्मोक्षः, ब्रह्मस्वरूपव्यतिरिक्तजीवत्वावस्थानात्, यच्चोक्तं मणिकृपाणदर्पणादिषूपलभ्य-

मानमुखमलिनत्वविमलत्वादिवच्छुद्ध्यशुद्ध्यादिव्यवस्थोपपत्तिरिति तत्रेदं विमर्शनीयम् अल्पत्वमलिनत्वाद्य औपाधिकाःदोषाःकदा नश्येयुरिति कृपाणाद्युपाध्यपगम इति चेत् किं तदल्पत्वाद्याश्रयःप्रतिबिम्बःतिष्ठति न वा ? तिष्ठति चेत् तत्स्थानीयस्य जीवस्यापि स्थितत्वादनिर्मोक्षप्रसङ्गः नश्यति चेत् तद्वदेव जीवनाशात्स्वरूपोच्छितिलक्षणो मोक्षः स्यात्, किञ्च यस्य ह्यपुरुषार्थरूपदोषप्रतिभासः तस्य तदुच्छेदः पुरुषार्थः, तत्र किमौपाधिकदोषप्रतिभासो बिम्बस्थानीयस्यब्रह्मणः ? उपप्रतिबिम्बस्थानीयस्य जीवस्य? उतान्यस्य कस्यचित्? आद्ययोः कल्पयोर्दृष्टान्तोऽयं न सङ्गच्छते मुखस्य मुखप्रतिबिम्बस्य चाल्पत्वादिदोषप्रतिभासशून्यत्वात्, न हि मुखं तत्प्रतिबिम्बं वा चेतयते ब्रह्मणोदोषप्रतिभासे ब्रह्मणो ऽविद्याश्रयत्वप्रसङ्गश्च तृतीयोऽपि कल्पो न कल्पते, जीवब्रह्मव्यतिरिक्तस्य द्रष्टुरभावात्, किञ्चाविद्याकल्प्यस्य जीवस्य कल्पकः क इति निरूपणीयं न तावदविदया अचेतनत्वात्, नापि जीव आत्माश्रयदोषप्रसङ्गात, शुक्तिकारजतादिवदविद्याकल्प्यत्वाच्च जीवभावस्य, ब्रह्मैव कल्पकमिति चेत् ब्रह्माऽज्ञानमेवायातम्, किञ्च ब्रह्माज्ञानानभ्युपगमे किं ब्रह्म जीवा-

न्पश्यति? न वा ? न पश्यति चेत् ईक्षापूर्विका विचित्र-सृष्टिर्नामरूपव्याकरणमित्यादि ब्रह्मणो न स्यात्, अथ पशत्यखण्डैकरसं ब्रह्म नाविद्यामन्तरेण जीवान् पश्यतीति ब्रह्माज्ञानप्रसङ्गः, अत एव मायाविद्याप्रविभाग-वादोऽपि निरस्तः, अज्ञानमन्तरेण हि मायिनोऽपिब्रह्मणो जीवदर्शित्वं न स्यात् न च मायावी परानदृष्ट्वा मोह-यितुमलं, न च माया मायाविनोदर्शनसाधनं दृष्टेषु-परेषु तन्मोहनसाधनमात्रत्वात्तस्याः, अथ ब्रह्मणो माया तस्य जीवदर्शित्वंकुर्वती जीवमोहनहेतुरिति-मन्यसे तर्हि परिशुद्धस्याखण्डेकरसस्वप्रकाशस्य ब्रह्मणः परदर्शनं कुर्वती माया मायाऽपरपर्य्यायाऽविद्यैवस्यात्, अथ मतं, विपरीतदर्शनहेतुरविद्या, माया तु मिथ्याभूतं ब्रह्मव्यतिरिक्तं मिथ्यात्वेनैव दर्शयन्ती न ब्रह्मणो विपरीतदर्शनहेतुः अतस्तस्या नाविद्यात्वमिति नैवं, चन्द्रैकत्वे ज्ञायमाने द्विचन्द्रज्ञानहेतोरप्यविद्यात्वात्, यदि च ब्रह्म मिथ्यात्वेनैव स्वव्यतिरिक्तं जानाति न तर्हि तन्मोहयति, न ह्यनुन्मत्तो मिथ्यात्वेन ज्ञातान् मोहयितुमीहते, अथ पुरुषार्थाऽपरमार्थदर्शनहेतुरविद्या, माया तु ब्रह्मणोनाऽपुरुषार्थदर्शनहेतुः अतोऽस्या ना-विद्यात्वमिति मतं, तन्न द्विचन्द्रज्ञानस्य दुःखहेतुत्वा-

भावेनापुरुषार्थत्वाभावेऽपि तद्धेतुरविद्यैव तन्निरसने च प्रयस्यन्ती, यदि च नापुरुषार्थदर्शनकरी माया तर्ह्यनुच्छेद्यतया नित्या ब्रह्मस्वरूपानुबन्धिनीस्यात्, अस्तु को दोष इति चेत् द्वैतदर्शनमेव दोषः, यत्र हि द्वैतमिव भवति यत्र त्वस्य सर्वमात्मैवाऽभूत्तत्केन कं पश्येदित्याद्यऽद्वैतश्रुतयः प्रकुप्येयुः परमार्थविषया अद्वैतश्रुतयः मायायास्त्वपरमार्थत्वादविरोध इति चेत्, अपरिच्छिन्नानन्दैकस्वरूपस्य ब्रह्मणोऽपरमार्थभूतमायादर्शनं तद्वत्ता वाऽविद्यामन्तरेण नोपपद्यते, किञ्चापरमार्थभूतया नित्यया मायया किं प्रयोजनं ब्रह्मणो ? जीवमोहनमिति चेत् ? अपुरुषार्थेन मोहनेन किं प्रयोजनं, क्रीडेति चेत् ? अपरिच्छिन्नानन्दस्य किं क्रीडया, परिपूर्णभोगानामेव क्रीडा पुरुषार्थत्वेन लोके दृष्टेति चेत् ? नैवमिहोपपद्यते, न ह्यपरमार्थभूतैः क्रीडोपकरणैरपरमार्थतया प्रतिभासमानैर्निष्पन्नयाऽपरमार्थभूतया क्रीडयाऽपरमार्थभूतेन च तत्प्रतिभासेनानुन्मत्तानां क्रीडारसो निष्पद्यते ।

मायाश्रयतयाऽभिमतब्रह्मात्मव्यतिरेकेणाविद्याश्रयस्य जीवस्य कल्पनाऽसम्भवश्च पूर्ववदेव द्रष्टव्यः, अतो ब्रह्मैवानाद्यविद्याशबलं स्वगतनानात्वं पश्यतीत्यद्वैती

यत्वंब्रह्मणोऽभ्युपयाद्भिरभ्युपेतव्यम्, यत्तु बन्धमोक्ष-व्यवस्था नोपपद्यत इति न तद्ब्रह्माज्ञानवादिनश्चोद्यम् एकस्यैव ब्रह्मणोऽज्ञस्य स्वज्ञाननिवृत्त्या मोक्ष्यमाणत्वात् बद्धमुक्तादिव्यवस्थाया एवाभावात् व्यवह्रियमाणायाश्च बद्धमुक्ताशिष्याचार्य्यादिव्यवस्थायाः काल्पनिकत्वात् स्वप्नदर्शिन इव चैकस्यवाविद्यया सर्वकल्पनोपपत्तेः, स्वप्नदृशा ह्येकेन दृष्टाः शिष्याचार्य्यादयः तदविद्या-कल्पिता एव, अतएव वह्वविद्याकल्पनमपि न युक्तिमत् पारमार्थिकी बन्धमोक्षव्यवस्था स्ववरव्यवस्था च जीवाज्ञानवादिनाऽपि नाभ्युपेयते, अपारमार्थिकी त्वेकस्यैवाविद्ययोपपद्यते, प्रयोगश्चबन्धमोक्षव्यवस्थाः स्वपरव्यवस्थाश्चस्वाविद्याकल्पिता अपारमार्थिकत्वा-त्स्वप्नदृष्टव्यवस्थावदिति, शरीरान्तराण्यपि मयैवात्म-वन्ति शरीरत्वादेतच्छरीरवत्, कार्य्यत्वात् जडत्वात्क-ल्पितत्वाद्वा एतच्छरीवत्, विवादाध्यासितं चेतनजात-महमेव चेतनत्वात यदनहं तदचेतनं दृष्टं यथा घटः, अतः स्वपरविभागोबद्धमुक्तशिष्याचार्यादिव्यवस्थाश्चै-कस्याविद्याकल्पिताः, द्वैतवादिनाऽपि बद्धमुक्तव्यव-स्था दुरुपपादा अतीतानां कल्पानामानन्त्यात् एकैक-स्मिन्कल्पे एकैकमुक्तावपि सर्वेषां मोक्षसम्भवादमुक्ता-

नुपपत्तेः, अनन्तत्वादात्मनाममुक्ताश्च सन्तीति चेत् किमिदमनन्तत्वम् असङ्ख्येयत्वमिति चेन्न भूयस्त्वादल्पज्ञैरसङ्ख्येयत्वेऽपीश्वरस्य सर्वज्ञस्य सङ्ख्येया एव तस्याप्यशक्यत्वे सर्वज्ञत्वं न स्यात्, आत्मनां निरसङ्ख्येयत्वादीश्वरस्याविद्यमानसङ्ख्यावेदनाभावो नासार्वज्ञ्यमावहतीति चेन्न भिन्नत्वे सङ्ख्याविधुरत्वं नोपपद्यते आत्मानः संख्यावन्तो भिन्नत्वात् माषसर्षपघटपटादिवत् भिन्नत्वे चात्मनां घटादिवत् जडत्वमनात्मत्वं क्षयित्वं च प्रसज्यते ब्रह्मणश्चानन्तत्वं न स्यात्,अनन्तत्वं नाम परिच्छेदरहितत्वं, भेदवादे च वस्त्वन्तराद्विलक्षणत्वेन ब्रह्मणो वस्तुतः परिच्छेदरहितत्वं न शक्यते वक्तुं वस्त्वन्तरभाव एवहि वस्तुतः परिच्छेदः, वस्तुतः परिच्छिन्नस्य देशतः कालतश्चापरिच्छिन्नत्वं न युज्यते वस्त्वन्तराद्विलक्षणत्वेन वस्तुतः परिच्छिन्ना एव हि घटादयो देशतःकालतश्च परिच्छिन्ना दृष्टा तथा सर्वे चेतनाःब्रह्म च, वस्तुतः परिच्छिन्ना देशकालाभ्यामपि परिच्छिद्यन्ते एवं च सत्यं ज्ञानमनन्तमित्यादिभिस्सर्वप्रकारपरिच्छेदरहितत्वं वदद्भिर्विरोधः, उत्पत्तिविनाशादयश्च जीवानां ब्रह्मणश्च प्रसज्येरन्, कालपरिच्छेद एव ह्युत्पत्तिविनाश

भागित्वम्, अत एवास्यैवापरिच्छिन्नस्य ब्रह्मणोऽविद्या-विजृम्भितं ब्रह्मादिस्तम्बपर्य्यन्तं कृत्स्नं जगत्सुखदुःख-प्रतिसन्धानव्यवस्थादयोऽपि स्वप्नव्यवस्थावदविद्यास्वा-भाव्यादुपपद्यन्ते, तस्मादेकमेव नित्यमुक्तस्वप्रकाश-स्वभावमनाद्यविद्यावशाज्जगदाकारेण विवर्तते इति परमार्थतो ब्रह्मव्यतिरिक्ताभावात्तदनन्यत्वं जगत इति, अत्रोच्यते निर्विशेषस्वप्रकाशमात्रं ब्रह्मानाद्यविद्याति-रोहितस्वस्वरूपं स्वगतनानात्वं पश्यतीत्येतत्प्रकाशस्व-रूपस्य निरंशस्य प्रकाशनिवृत्तिरूपतिराधाने स्वरूपना-शप्रसङ्गेन तिरोधानासम्भवादिभ्यः सकलप्रमाणविरुद्धं स्ववचनविरुद्धं चेति पूर्वमेवोक्तं, यत्पुनरुक्तं कारणव्य-तिरिक्तं कार्य्यं युक्तिबाधितत्वेन शुक्तिकारजतादिवद्‌ भ्रम इति तदयुक्तं युक्तेरभावात् ।

यत्त्वनुवर्त्तमानस्य कारणमात्रस्य सत्यत्वं व्यावर्त-मानानां घटशरावादिकार्य्याणामसत्यत्वमिति तदप्य-न्यत्र दृष्टस्यान्यत्र व्यावर्तमानता न बाधिकेत्यादिभिः पूर्वमेव परिहृतम्, यच्चोपलभ्यमानत्वविनाशित्वाभ्यां सदसदनिर्वचनीयत्वेन कार्य्यस्य मृषात्वमिति तदसत् उपलब्धिविनाशयोगो हि न मिथ्यात्वं साधयति, किं त्वनित्यत्वं यद्देशकालसम्बन्धितया यदुपलब्धं तद्देश-

कालसम्बन्धितया बाधितत्वमेव हि तस्य मिथ्यात्वे हेतुः देशान्तरकालान्तरसम्बन्धितयोपलब्धस्यान्यदेश-कालसम्बन्धित्वेन बाधितत्वं देशान्तरकालान्तराव्याप्तिमात्रं साधयति न तु मिथ्यात्वं, प्रतिप्रयोगश्च घटादिकार्य्यं सत्यं देशकालादिप्रतिपन्नोपाधावबाधितत्वात् आत्मवत्, यच्चोक्तं कारणस्वरूपादविकृताद्विकृताच्च कार्य्योत्पत्तिर्न सम्भवतीति सदसत्, देशकालादिसहकारिसमवहितात्कारणात्कार्य्योत्पत्तिसम्भवात्, तत्समवधानं च विकृतस्याविकृतस्य च न सम्भवतीति यदुक्तं तदप्ययुक्तं पूर्वमविकृतस्यैव कालादिसमवधानसम्भवाद विकृतत्वाविशेषात्पूर्वमपि देशकालादिसमवधानं प्रसज्यते इति चेत् न देशकालादिसमवधानस्य कारणन्तरायत्तस्यैतदायत्तत्वाभावात्, अतो देशकालादिसमवधानरूपविशेषमापन्नं कारणं कार्य्यमुत्पादयतीति न किञ्चिदवहीनं, कारणस्य च कार्य्यं प्रत्यारम्भकत्वमबाधितं दृश्यमानं न केनापि प्रकारेणापन्होतुं शक्यते, यत्तु हेमादिमात्रस्य रुचकादिकार्य्यस्यैतदाश्रयस्य वा हेमादेरारम्भकत्वं न सम्भवतीति तदयुक्तं हेमादिमात्रस्यैव यथोक्तपरिकरयुक्तस्यारम्भकत्वसम्भवात्, नचारम्भकहेमव्यतिरिक्तं कार्य्यं न

दृश्यते इति वक्तुं शक्यं हेमातिरिक्तस्य स्वस्तिकस्य दर्शनात्, बुद्धिशब्दान्तरादिभिर्वस्त्वन्तरस्य साधितत्वाच्च न चायं शुक्तिकारजतादिवद्भ्रमः, उत्पत्तिविनाशयोरन्तराले उपलभ्यमानस्य तद्देशकालसम्बन्धितया बाधादर्शनात्, न चास्या उपलब्धेर्बाधिका काचिदपि युक्तिर्दृश्यते प्रागनुपलब्धस्वस्तिकोपलब्धिवेलायामपि हेमप्रत्यभिज्ञा स्वस्तिकाश्रयतया हेम्नोऽप्यनुवृत्तिरविरुद्धा, श्रुतिभिस्तुप्रपञ्चमिथ्यात्वसाधनं पूर्वमेव निरस्तम्, यच्चान्यदपि प्रत्यक्षाविरोधादि प्रतिवक्तव्यं तदपि सर्वं पूर्वमेव सूक्तम्, यच्चोक्तम् एकेनात्मना सर्वाणि शरीराण्यात्मवन्तीति तदसत्, एकस्यैव सर्वशरीरप्रयुक्तसुखदुःखप्रतिसन्धानप्रसङ्गात्, सौभरिप्रभृतिषु ह्यात्मैकत्वेनाऽनेकशरीरप्रयुक्तसुखादिप्रतिसन्धानमेकस्य दृश्यते, न चाहमर्थस्य ज्ञातृत्वात्तद्भेदात्प्रतिसन्धानाभावो नात्मभेदादिति वक्तुं शक्यम् आत्मा ज्ञातैव स चाहमर्थ एव अन्तःकरणभूतस्त्वहङ्कारो जडत्वात्करणत्वाच्च शरीरेन्द्रियादिवन्न ज्ञातेत्युपपादितत्वात्, यच्च शरीरत्वजडत्वकार्य्यत्वकल्पितत्वैस्सर्वशरीराणामेकस्याविद्याकल्पितत्वमुक्तं तदपि सर्वशरी-

शाणामविद्याकल्पितत्वस्यैवाभावादयुक्तं तदभावश्चाबाधितस्य सत्यतोपादानात्, यच्च चेतनादन्यस्य जडत्वदर्शनात्सर्वचेतनानामनन्यत्वमुक्तं तदपि सुखदुःखव्यवस्थया भेदोपपादनादेव निरस्तम्, यत्तु मयैवात्मवन्ति मदविद्याकल्पितान्यहमेव सर्वं चेतनजातमित्यहमर्थस्यैक्यमुपपादितं तदज्ञातस्वसिद्धान्तस्य भ्रान्तिजल्पितम् अहन्त्वमाद्यर्थविलक्षणं चिन्मात्रं ह्यात्मा त्वन्मते, किञ्च निर्विशेषचिन्मात्रातिरिक्तं सर्वं मिथ्येति वदतोमोक्षार्थश्रवणादिप्रयत्नो निष्फलः, अविद्याकार्यत्वात् शुक्तिकारजतादिषु रजताद्युपादानादिप्रयत्नवन्मोक्षार्थप्रयत्नोऽपि व्यर्थः, कल्पिताचार्यायत्तज्ञानकार्यत्वात् शुकप्रह्लादवामदेवादिप्रयत्नवत्, तत्त्वमस्यादिवाक्यजन्यं ज्ञानं न बन्धनिवर्तकम् अविद्याकल्पितवाक्यजन्यत्वात्स्वयमविद्यात्मकत्वात्, अविद्याकल्पितज्ञात्राश्रयत्वात्, कल्पिताचार्यायत्तश्रवणजन्यात्वाद्वा स्वप्नबन्धनिवर्त्तकवाक्यजन्यज्ञानवत्, किञ्च निर्विशेषचिन्मात्रं ब्रह्म मिथ्या अविद्याकार्य्यज्ञानगम्यत्वात् अविद्याकल्पितज्ञात्राश्रितज्ञानगम्यत्वात् अविद्याकल्पितज्ञानगम्यत्वाद्वा यदेवं तत्तथा, यथा स्वाप्नगन्धर्वनगरादिः।

न च निर्विशेषचिन्मात्रं ब्रह्म स्वयं प्रकाशते येन

न प्रमाणान्तरमपेक्षते, यत्त्वात्मसाक्षिकं स्वयं प्रकाश-ज्ञानं दृश्यते तत्तु ज्ञेयविशेषसिद्धिरूपं ज्ञातृगतमेव दृश्यत इति पूर्वमेवोक्तं,यानि च तस्य निर्विशेषत्वसाधनानि यौक्तिकानि ज्ञानान्युपन्यस्तानि तानि चानन्तरोक्तैरविद्याकार्य्यत्वादित्यादिभिरनुमानैर्निरस्तानि, न च निर्विशेषस्यचिन्मात्रस्याज्ञानसाक्षित्वमहङ्कारादिजगद्भ्रमश्चोपपद्यते, साक्षित्वभ्रमादयोऽपि हि ज्ञातृविशेषगता दृष्टाः न ज्ञप्तिमात्रगताः न च तस्य प्रकाशकत्वं स्वायत्तप्रकाशता वा सिध्यति, प्रकाशो हि नाम कस्याचित्पुरुषस्य कञ्चनार्थविशेषं प्रति सिद्धिरूपो दृश्यते, तत एव हि तस्य स्वयंप्रकाशतोपपाद्यते भवद्भिरपि, नचाताद्दृशस्य निर्विशेषस्य स्वप्रकाशता सम्भवति, यः पुनस्स्वगोष्ठीष्वपरमार्थादपि परमार्थकार्य्यं दृश्यत इत्युद्घोषः सोऽपि तानि कार्य्याणि सर्वाण्यबाधितकल्पानि व्यवहारिकसत्यानि वस्तुतस्त्वविद्यात्मकान्येवेति स्वाभ्युपगमादेव निरस्तः।

अस्माभिरपि सर्वत्र परमार्थादेव कारणात्सर्वकार्य्योत्पत्तिमुपपादयाद्भिः पूर्वमेव निरस्तः, न च त्वयैषामनुभूयमानानां श्रुतिविरोधो वक्तुं शक्यते श्रुतेरप्यविद्याकार्य्यत्वेनाविद्यात्मकत्वेन चोक्तदृष्टान्तेभ्यो

विशेषाभावात्, यत्तु ब्रह्मणोऽपारमार्थिकज्ञानगम्यत्वेऽपि पश्चात्तनबाधादर्शनाद्ब्रह्म सत्यमेवेति तदसत् दुष्टकारणजन्यज्ञानगम्यत्वे निश्चिते सति पश्चात्तनबाधादर्शनस्याकिञ्चित्करत्वात्, तथा शून्यमेव तत्त्वमिति वाक्यजन्यज्ञानस्य पश्चात्तनबाधादर्शनेऽपि दोषमूलत्वनिश्चयादेष तदर्थस्यासत्यत्वम्, किञ्च नेह नानाऽस्ति किञ्चन विज्ञानमानन्दं ब्रह्मेति विज्ञानमात्रातिरिक्तस्य वस्तुजातस्य निषेधकत्वेन सर्वस्मात् परत्वात्पश्चात्तनबाधादर्शनमुच्यते शून्यमेव तत्त्वमिति तस्याप्यभावं वदतस्तस्मात्परत्वेन पश्चात्तनबाधो दृश्यते सर्वशून्यतातिरेकिनिषेधासम्भवात्तस्यैव पश्चात्तनबाधादर्शनं,दोषमूलत्वं तु प्रत्यक्षादीनां वेदान्तजन्मनःसर्वशून्यज्ञानस्याप्यविशिष्टम्, अतः सर्वं विज्ञानजातं पारमार्थिक ज्ञातृगतं स्वयं च परमार्थभूतमर्थविशेषसिद्धिरूपं तत्र किञ्चिद् ज्ञानं दोषमूलं दोषश्च परमार्थः, किञ्चिच्च निर्दोषं पारमार्थिकसामग्रीजन्यमिति यावन्नाभ्युपेयते न तावत्सत्यमिथ्यार्थव्यवस्था लोकव्यवहारश्च सेत्स्यति, लोकव्यवहारो हि पारमार्थिको भ्रान्तिरूपश्च पारमार्थिकज्ञातृगतार्थविशेषसिद्धिरूपप्रकाशपूर्वकः ।

निर्विशेषसन्मात्रस्य तु पारमार्थिकस्यऽपारमार्थि-

कस्य च प्रतिभासादेर्हेतुत्व सम्भवाल्लोकव्यवहारो न सम्भवति, यच्च तैर्निरधिष्ठानभ्रमासम्भवात् सर्वाध्यासाधिष्ठानस्य सन्मात्रस्य तु पारमार्थिकत्वमुक्तं तदपि दोषदोषाश्रयत्वज्ञातृत्वज्ञानानामपारमार्थ्येऽपि पारमार्थिकस्य भ्रमोपपत्तिवदधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेर्निस्तम्, अथाधिष्ठानापारमार्थ्ये न क्वचिद् भ्रमो दृष्ट इति सन्मात्रस्य पारमार्थिकत्वमवश्याश्रयणीयमिति मन्यसे हन्त तर्हि दोषदोषाश्रयत्वज्ञातृत्वज्ञानानामपारमार्थ्येऽपि न क्वचिदभ्रमो दृष्ट इति सन्मात्रस्य पारमार्थिकत्वमवश्याश्रयणीयमिति मन्यसे हन्त तर्हि दोषदोषाश्रयत्वज्ञातृत्वज्ञानानामपारमार्थ्येऽपि न क्वचिद्भ्रमो दृष्ट इति दर्शनानुगुण्येन तेषामपि पारमार्थ्यमवश्याश्रयणीयमिति न कश्चिद्विशेषोऽन्यत्र तत्संरम्भात्, यत्तु भेदपक्षेऽप्यतीतकल्पनामानन्त्यात्सर्वेषामात्मनां मुक्तत्वेन बद्धासम्भवाद्बद्धमुक्तव्यवस्था न सम्भवतीति तदात्मानन्त्येन परिहृतम् ।

यत्त्वात्मनां भिन्नत्वे माषसर्षपघटादिवत्सङ्ख्यावत्त्वमवर्जनीयमिति तत्र घटादीनामप्यनन्तत्वात् दृष्टान्तः साध्यविकलस्स्यात्, दश घटास्सहस्रं माषा इति सङ्ख्यावत्त्वं दृश्यत इति चेत् सत्यं, तत्तु न घटादि-

स्वरूपगतमपि तु देशकालाद्युपाधिमद्घटादिगतं तादृशं तु सङ्ख्यावत्त्वमात्मनामप्यभ्युपगच्छामः, न च तावता सर्वमुक्तिप्रसङ्गः, आत्मस्वरूपानन्त्यात्, यत्त्वात्मनां भिन्नत्वे घटादिवज्जड़त्वानात्मत्वक्षयित्वप्रसङ्ग इति तदयुक्तम् एकजातीयानां भेदस्य तज्जातीयानां जात्यन्तरीयत्वानापादनात्, न हि घटादीनां भेदस्तेषां पटत्वमापादयति, यत्तु भिन्नत्वे वस्तुतः परिच्छेदाद् देशकालाभ्यामपि परिच्छेदो ब्रह्मणः प्रसज्यत इत्यनन्तत्वं ब्रह्मणो न सिध्यति इति, तदयुक्तं वस्तुतः परिच्छिन्नानामपि देशकालपरिच्छेदस्य न्यूनाधिकभावेनानियमदर्शनाद्देशकालसम्बन्धेयत्तायाः प्रमाणान्तरायत्तनिर्णयत्वेन ब्रह्मणः सर्वदेशकालसम्बन्धस्यापि प्रमाणान्तरादापततो विरोधाभावात् वस्तुतः परिच्छेदमात्रादपि सर्वप्रकारपरिच्छेदरहितत्वाभावादानन्त्यासिद्धि रिति चेत्, तद्भवतोऽप्यविद्याविलक्षणत्वं ब्रह्मणोऽभ्युपयतः समानम् ।

अतस्वतोऽविद्याविलक्षणत्वाभ्युपगमाद्ब्रह्मणोऽपि भिन्नत्वेन भेदप्रयुक्ता दोषास्सर्वे तवापि प्रसज्येरन्, यद्यविद्याविलक्षणत्वं नाभ्युपेयते तर्ह्यविद्यात्मकत्वमेव ब्रह्मणः स्यात् सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणवाक्य-

मपि तत् एवापार्थकं स्यात्, भेदतत्त्वानभ्युपगमे हि स्वपक्षपरपक्ष साधनदूषणादिविवेकाभावात्सर्वमसमंञ्जसं स्यात्, आनन्त्यप्रसिद्धिश्च देशकालपरिच्छेदरहितत्वमात्रेण न वस्तुतोऽपि पच्छिदरहितत्वेन तथाविधस्य शशविषाणायमानस्यानुपलब्धेः ।

भेदवादिनस्तु सर्वचिदचिद्वस्तुशरीरत्वेन ब्रह्मणस्सर्वप्रकारत्वात्स्वतः परतोऽपि परिच्छेदो न विद्यते, तदेवं कारणाद्भिन्नस्य कार्य्यस्य सत्यत्वाद्ब्रह्मकार्यं कृत्स्न जगद्ब्रह्मणोऽन्यदेवेति प्राप्ते प्रक्ष्महे "तदनन्यत्वमारम्भणशब्दादिभ्यः" तस्मात्परमकारणाद्ब्रह्मणोऽनन्यत्वंजगतः आरम्भणशब्दादिभ्यः तदुपपादयद्भ्योऽवगम्यते आरम्भणशब्द आदिर्येषां वाक्यानां तान्यारम्भणशब्दादीनिवाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं, सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं, तदैक्षतबहुस्यां प्रजायेयेति तत्तेजोऽसृजत, अनेन जीवेनात्मनाऽनुप्रविश्य, सन्मूलास्सौम्येमास्सर्वाः प्रजास्सदायतनाःसत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इत्येतानि प्रकरणान्तरस्थान्यप्येवञ्जातीयकान्यत्राभिप्रेतानि, एतानि हि वाक्यानि चिदचिदात्मकस्य जगतः परस्माद्ब्रह्मणोऽनन्यत्वमुपपाद

यन्ति, तथा हि "स्तब्धोऽस्युत तमादेशमप्राक्ष्योयेना- श्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कृत्स्नस्य जगतो ब्रह्मैककारणत्वं कारणात्कार्य्यस्यानन्यत्वं च हृदि निधाय कारणभूतब्रह्मविज्ञानेन कार्य्यभूतस्य सर्वस्य विज्ञाने प्रतिज्ञाते सति कृत्स्नस्य ब्रह्मैककारणतामजानता शिष्येण कथं नु भगवः स आदेश इत्यन्यज्ञानेनान्यज्ञाततासम्भवं चोदितो जगतो ब्रह्मैककारणतामुपदेक्ष्यन् लौकिकप्रतीतिसिद्धं कारणात्कार्य्यस्यानन्यत्वं तावत यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादिति दर्शयति यथैकमृत्पिण्डरब्धानां घटशरावादीनां तस्मादनतिरिक्तद्रव्यतया तज्ज्ञानेन ज्ञाततेत्यर्थः।

अत्र काणादवादेन कारणात्कार्य्यस्य द्रव्यान्तरत्वमाशंक्य लोकप्रतीत्यैव कारणात्कार्य्यस्यानन्यत्वमुपपादयति वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति आरभ्यते—आलभ्यते स्पृश्यत इत्यारम्भणं "कृत्य ल्युटो बहुल" मिति कर्मणि ल्युट्, वाचो वाक्पूर्वकेण व्यवहारेण हेतुनेत्यर्थः, घटेनोदकमाहरेत्यादि वाक्पूर्वकाह्युदकाहरणादिव्यवहारः, तस्य व्यवहारस्य सिद्धये तेनैव मृद्द्रव्येण पृथुबुध्नोदराकारत्वादिलक्षणो विकारः संस्थानविशेषस्तत्प्रयुक्तं च घट इत्यादि नाम-

धेयं स्पृश्यते उदकाहरणादिव्यवहारविशेषसिध्यर्थं मृद्द्रव्यमेव संस्थानान्तरनामधेयान्तरभाग्भवति ।

अतो घटाद्यपि मृत्तिकेत्येव सत्यं मृत्तिकाद्रव्यमित्येव सत्यं प्रमाणेनोपलभ्यत इत्यर्थः, न तु द्रव्यान्तरत्वेन, अतस्तस्यैव मृद्धिरण्यादेर्द्रव्यस्य संस्थानान्तरभाक्त्वमात्रेणैव बुद्धिशब्दान्तरादय एवोपपद्यन्ते, यथैकस्यैव देवदत्तस्यावस्थाविशेषैर्बालो युवा स्थविर इति बुद्धिशब्दान्तरादयः कार्य्यविशेषाश्च दृश्यन्ते-यदुक्तं सत्यामेव मृदि घटो नष्ट इति व्यवहारात्कारणादन्यत्कार्य्यमिति तदुत्पत्तिविनाशादीनां कारणभूतस्यैव द्रव्यस्यावस्थाविशेषत्वाभ्युपगमादेव परिहृतं तत्तदवस्थस्यैकस्यैव तस्यैव द्रव्यस्य ते ते शब्दास्तानि तानि च कार्य्याणीति युक्तं द्रव्यस्य तत्तदवस्थत्वं कारकव्यापारायत्तमिति तस्यार्थं वत्त्वम्, अभिव्यत्त्यनुबन्धीनि चोद्यानि तस्या अनभ्युपगमदेव परिहृतानि, उत्पत्त्यभ्युपगमेऽपि सत्कार्य्यवादो न विरुध्यते सत एवोत्पत्तेः विप्रतिषिद्धमिदमभिधीयते पूर्वमेव सत्तदुत्पद्यते चेति अज्ञातोत्पत्तिविनाशयाथात्म्यस्येदं चोद्यं द्रव्यस्योत्तरोत्तर संस्थानयोगः पूर्वपूर्वसंस्थानसंस्थितस्य विनाशः स्वावस्थस्यतूत्पत्तिः, अतः सर्वावस्थस्य द्रव्यस्य सत्त्वात्स-

त्कार्य्यवादो न विरुध्यते, संस्थानस्यासत उत्पत्तावसत्कार्य्यवादप्रसङ्ग इति चेत् असत्कार्य्यवादिनोऽप्युत्पत्तेरनुत्पत्तिमत्त्वेसत्कार्य्यवादप्रसङ्गः,उत्पत्तिमत्त्वे चानवस्था, अस्माकं त्ववस्थानां पृथक्प्रतिपत्तिकार्य्ययोगानर्हत्वादवस्थावत एवोत्पत्त्यादिकं सर्वमिति निरवद्यं,कपालत्वचूर्णत्वपिण्डत्वावस्थाप्रहाणेन घटत्वावस्थावेदकत्वावस्थाप्रहाणेन बहुत्वावस्था,तत्प्रहाणेनैकत्वावस्थाचेति न कश्चिद्विरोधः,तथा सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयामिति सदेवेदम् इदानीम् विभक्तनामरूपत्वेन नानारूपं जगदेकम् अग्रे नामरूपविभागाभावेनैकमेवासीत्,सर्वशक्तित्वेनाष्ठात्रन्तरासहतयाऽद्वितीयं चेत्यनन्यत्वमेवोपपादितं तथा तदैक्षत बहुस्यां प्रजायेयेति वक्ष्यमाणतेजः प्रभृतिविविधविचित्रस्थिरत्रसरूपजगत्त्वेनात्मनोबहुभवनं संकल्प्य जगत्सर्गाभिधानात् कार्य्यभूतस्य जगतः परमकारणात्परस्माद्ब्रह्मणोऽनन्यत्वमवसीयते सच्छब्दवाच्यस्य परस्य ब्रह्मणः सर्वज्ञस्य सत्यसंकल्पस्य निरवद्यस्यैव सदेवेदामिति निर्देशार्हजगत्त्वं सच्छब्दवाच्यस्य च जगतोनामरूपविभागाभावेनैकत्वमद्वितीयत्वमधिष्ठात्रन्तरानपेक्षत्वं पुनरपि तस्यैव विविधविचित्रास्थिरत्रसरूपजगत्त्वेन बहुभवनसंकल्परूपेक्षणं यथासंकल्पं

सर्गश्च कथमुपपद्यत इत्याशङ्क्याह सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति" तासां त्रिवृतं त्रिवृतमित्यादि तिस्रो देवता इति कृत्स्नमचिद्वस्तु निर्दिश्य स्वात्मकजीवानुप्रवेशेनैतद्विचित्रनामरूपभाक्करवाणी-त्युक्तम्, अनेन जीवेनात्मना मदात्मकजीवेनात्मतया अनुप्रविश्यैतद्विचित्रनामरूपभाक्करवाणीत्यर्थः, स्वात्मनो जीवस्य चात्मतयाऽनुप्रवेशकृतं नामरूपभाक्त्वमित्युक्तं भवति,तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभवदिति श्रुत्यन्तरेण स्पष्टं सजीवं जगत्परेण ब्रह्मणाऽऽत्मतयाऽनुप्रविष्टमिति तदेतत्कार्य्यावस्थस्य च कारणावस्थस्य च चिदचिद्वस्तुनः सकलस्य स्थूलस्य सूक्ष्मस्य च परब्रह्मशरीरत्वं,परस्य च ब्रह्मण आत्मत्वमन्तर्य्यामिब्रह्मणादिषु सिद्धं स्मारितम्, अनेन पूर्वोक्ता शङ्का निरस्ता, अचिद्वस्तुनि सजीवे ब्रह्मण्यात्मतयाऽवस्थिते नामरूपव्याकरणवचनाच्चिदचिद्वस्तुशरीरकं ब्रह्मैव जगच्छब्दवाच्यमिति सदेवेदमग्र एकमेवासीदित्यादि सर्वमुपपन्नतरं शरीरभूतचिदचिद्वस्तुगताः सर्वविकाराश्चपुरुषार्थाश्चेति ब्रह्मणो निरवद्यत्वं कल्याणगुणाकरत्वं च सुस्थितम् ।

तदेत "दधिकंतुभेदानिर्द्देशा" दित्यनन्तरमेव वक्ष्यति, तथा "ऐतदात्म्यमिदं सर्वं" इति कृत्स्नस्य चेतनाचेतनस्य ब्रह्मतादात्म्यमुपदिशति, तदेव च तत्त्वमसीति निगमयति तथा प्रकरणान्तरस्थेष्वपि वाक्येषु सर्वं खल्विदं ब्रह्म आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्, इदं सर्वं यदयमात्मा ब्रह्मैवेदं सर्वमात्मैवेदं सर्वमित्यनन्यत्वं प्रतीयते, तथाऽन्यत्वं च निषिध्यते "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद, नेह नानाऽस्ति किंचन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति, तथा "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यविदुषो द्वैतदर्शनं विदुषश्चाद्वैतदर्शनं प्रतिपादयदनन्यत्वमेव तात्त्विकमिति प्रतिपादयति, तदेवमारम्भणशब्दादिभ्योजगतः परमकारणात्परस्माद्ब्रह्मणोऽनन्यत्वमुपपाद्यते, अत्रेदं तत्त्वं चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्मैव सर्वदा सर्व-शब्दाभिधेयं तत्कदाचित्स्वस्मात्स्वशरीरतयाऽपि पृथग्व्यपदेशानर्हसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरं तत्कारणावस्थं ब्रह्म कदाचिच्च विभक्तनामरूपव्यवहारार्हस्थूलदशापन्नचिदचिद्वस्तुशरीरं, तच्च कार्य्यावस्थमिति कारणात्परस्मा-

र्ब्रह्मणः कार्य्यरूपं जगदनन्यत् शरीरभूत चिदचिद्वस्तुनः शरीरिणो ब्रह्मणश्च कारणावस्थायां कार्य्यावस्थायां च श्रुतिशतसिद्धाया स्वभावव्यवस्थाया गुणदोषव्यवस्था च "नतु दृष्टान्तभावात्" इत्यत्रोक्ता।

ये तु कार्य्यकारणयोरनन्यत्वं कार्य्यस्य मिथ्यात्वाश्रयणेन वर्णयन्ति न तेषां कार्य्यकारणयोरनन्यत्वं सिध्यति सत्यमिथ्यार्थयोरैक्यानुपपत्तेः, तथा सति ब्रह्मणमिथ्यात्वं जगतः सत्यत्वं वा स्यात्, ये च कार्य्यमपि पारमार्थिकमभ्युपयन्त एव जीवब्रह्मणोरौपाधिकमन्यत्वं स्वाभाविकं चानन्यत्वम् अचिद्ब्रह्मणोस्तु द्वयमपि स्वाभाविकमिति वदन्ति तेषामुपाधिब्रह्मव्यतिरिक्तवस्त्वन्तराभावान्निरवयवस्याखण्डितस्य ब्रह्मण एवोपाधि सम्बन्धाद्ब्रह्मस्वरूपस्यैव हेयाकारपरिणामाच्च शक्तिपरिणामाभ्युपगमे शक्तिब्रह्मणोरनन्यत्वाच्च जीवब्रह्मणोः कर्म्मवश्यत्वापहतपाप्मत्वादिव्यवस्थावादिन्योऽचिद्ब्रह्मणोश्च परिणामापरिणामवादिन्यः श्रुतयो व्याकुप्येयुः, ये पुनर्निरस्तनिखिलभोक्तृत्वादिसमस्तविकल्पविप्लवं सर्वशक्तियुक्तं सन्मात्रद्रव्यमेव कारणं ब्रह्म तच्च प्रलयवेलायां शान्ताशेषसुखदुःखानुभवविशेषं स्वप्रकाशमपि सुषुप्तावदचिद्विलक्षणमवस्थितं सृष्टिवेलायां सृत्ति-

कार्त्स्न्यमिव घटशरावादिरूपं समुद्र इव च फेनतरङ्गबुद्बुदादिरूपो भोक्तृभोग्यनियन्तृरूपेणांश त्रयावस्थमवतिष्ठते, अतो भोक्तृत्वभोग्यत्वनियन्तृत्वानि तत्प्रयुक्ताश्च गुणदोषाः शरावत्वघटत्वमणिकत्ववत्तद्गतकार्य्यभेदवच्च व्यवतिष्ठन्ते, भोक्तृभोग्यनियन्तॄणां सदात्मनैकत्वं च घटशरावमणिकादीनां मृदात्मनैकत्ववदुपपद्यते, अतस्सन्मात्रमेव द्रव्यंसर्वावस्थावास्थितमिति ब्रह्मणोऽनन्यज्जगदातिष्ठन्ते, तेषां सकलश्रुतिस्मृतीतिहासपुराणन्यायविरोधः, सर्वा हि श्रुतयस्सस्मृतीतिहासपुराणास्सर्वेश्वरेश्वरं सदैव सर्वज्ञं सर्वशक्तिं सत्यसंकल्पं निरवद्यं देशकालावच्छिन्नानवधिकातिशयानन्दं परमकारणं ब्रह्म प्रतिपादयन्ति, न पुनरीश्वरादपि परमीश्वरांशि सन्मात्रं, तथा हि सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहुस्यां प्रजायेयेति, ब्रह्म वा इदमग्र आसीदेकमेव तदेकं सन्नव्यभवत् तच्छ्रेयोरूमत्यसृजत् क्षत्रं यान्येतानि देवक्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति, आत्मा वा इदमेकमेवाग्र आसीत् नान्यत्किञ्चनमिषत्स ऐक्षत लोकान्नु सृजा इति, एको

ह वै नारायण आसीत् न ब्रह्मा नेशानो नेमे द्यावा-पृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्य्यः स एकाकी न रमते तस्य ध्यानान्तस्थस्येत्यादिभिः परमकारणं सर्वेश्वरेश्वरो नारायण एवेत्यवगम्यते, सद्-ब्रह्मात्मशब्दा हि तुल्यप्रकरणस्थास्तत्तुल्यप्रकरणस्थेन नारायण—शब्देन विशेषितास्तमेवावगमयन्ति, तमी-श्वराणां परमं महेश्वरं तद्दैवतानां परमं च दैवतं, स कारणं करणाधिपाधिपो न तस्य कश्चिज्जनिता न चाधिप" इतीश्वरस्यैव कारणत्वं श्रूयते, स्मृतिरपि मानवी "ततः स्वयम्भूर्भगवानिति, प्रकृत्य "सोऽभि-ध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु वीजमवासृजदिति" इतिहासपुराणा-न्यपि पुरुषोत्तममेव परमकारणमभिदधति "नारायणो जगन्मूर्तिरमन्तात्मा सनातनः। स सिसृक्षुः सहस्रां-शादसृजत्पुरुषान् द्विधा। विष्णोः सकाशादुद्भूतं जगत्त-त्रैव च स्थित" मित्यादिषु, न चेश्वरः सन्मात्रमोति वक्तुं शक्यं तस्य तदंशवाभ्युपगमात्सविशेषत्वाच्च, न च तस्य ज्ञानानन्दाद्यनन्तकल्याणगुणयोगःकादाचित्क इति वक्तुं शक्यते, तेषां स्वाभाविकत्वेन सदातनत्वात् पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबल-

क्रिया च, यः सर्वज्ञः सर्वविदित्यादिभ्यः ज्ञानानन्दादिशक्तियोग एवास्य स्वाभाविक इति मा वोचः शक्तिसस्वाभाविकी ज्ञानबलक्रिया च स्वाभाविकीति पृथक्निर्देशाल्लक्षणाप्रसङ्गाच्च ।

न च पाचकादिवत्सर्वज्ञ इत्यादिषु शक्तिमात्रे कृत्प्रत्यय इति वक्तुं शक्य कृत्प्रत्ययमात्रस्य शक्तावस्मरणात्, "शक्तौ हस्तिकपाटयो" रित्यादिषु केषांचिदेव कृत्प्रत्ययानां शक्तिविषयत्वस्मरणात्, पाचकादिषु त्वगत्या लक्षणा समाश्रीयते, किञ्चेश्वरस्य तदंशविशेषत्वात्तस्य चांशित्वे तरङ्गात्समुद्रस्येवांशादंशिनोऽधिकत्वात् तमीश्वराणां परमं महेश्वरं, न तत्समश्चाभ्यधिकश्च दृश्यत इत्यादीनीश्वरविषयाणि परःशतानि वचांसि बाध्येरन्, किञ्च सन्मात्रस्य सर्वात्मकत्वेंऽशित्वे चेश्वरस्य तदंशविशेषत्वात्तस्य सर्वात्मकत्वांशित्वोपदेश व्याहन्येरन्, न हि माणिकात्मकत्वं तदंशत्वं वा घटशरावादेः स्वांशेषु सर्वेषु सन्मात्रस्य पूर्णत्वेनेश्वरांशेऽपि तस्य पूर्णत्वात्तदात्मकानि तदंशाश्चेतराणि वस्तुनीति चेत् न घटेऽपि सन्मात्रस्य पूर्णत्वादीश्वरस्यापि घटात्मकत्वात्तदंशत्वप्रसङ्गात्, नच सन्मात्रस्य घटोऽस्ति पटोऽस्तीति वस्तुधर्म्मतयाऽवगतस्य द्रव्यत्वं कारणत्वं

श्चोपपद्यते, व्यवहारयोग्यता हि सत्त्वं विरोधिव्यवहारयोग्यता तद्व्यवहारयोग्यस्यासत्त्वं द्रव्यमेव सादित्यभ्युपगमेक्रियादीनामसत्त्वप्रसङ्गः, क्रियादिषु काशकुशावलम्बनेऽपि सर्वत्रैकरूपा सत्ता दुरुपपादा सदात्मना च सर्वस्याभिन्नत्वे सर्वज्ञत्वेन सर्वस्वभावप्रतिसन्धानात्सर्वगुणदोषसंकरप्रसङ्गश्च पूर्वमेवोक्तः, अतो यथोक्तप्रकारमेवानन्यत्वम्, अथोच्यते एकस्यैवावस्थान्तरयोगेऽपि बुद्धिशब्दान्तरादयो बालत्वयुवत्वादिषु दृश्यन्ते मृद्दारुहिरण्यादिषु द्रव्यान्तरत्वेऽपि दृश्यन्ते तत्र मृद्घटादिषु कार्य्यकारणेषु बुद्धिशब्दान्तरादयोऽवस्थानिबन्धना एवेति कुतो निर्णीयत इति ॥ श्री॰भा॰

अर्थ—"सृष्टि से प्रथम असत् था, ऐसा मत कहो, क्योंकि कार्य्य कारण के समान लक्षणरूप नियम का निषेध पाया-जाता है" इत्यादि सूत्रों में कारणरूप ब्रह्म से कार्य्यरूप जगत् का अनन्यत्व स्वीकार करके ब्रह्म जगत् का कारण प्रतिपादन किया गया है, अब वही एकत्व शंका करके समाधान किया जाता है, इस विषय में कणाद मतानुयायियों का कथन है कि कारण से कार्य्य भिन्न है क्योंकि (१) कार्य्य विलक्षण बुद्धि द्वारा जाना जाता है जैसाकि तन्तुओं की भिन्न प्रकार की प्रतीति है और कपड़े की भिन्न प्रकार की; वैसे ही मिट्टी और घट में भी भिन्न २ प्रतीति पाई जाती है (२) नाम भेद होने से भी कार्य्य कारण का भिन्न २ शब्दों द्वारा प्रयोग

कियाजाता है जैसाकि तन्तु पट नहीं कहे जाते और पट तन्तु नहीं कहाजाता (३) कार्य्यभेद से, जैसे मिट्टी के पिण्ड से जल नहीं लाया जासक्ता न घटों से दीवार बनसक्ती है (४) समयभेद से, जैसे प्रथम कारण पश्चात् कार्य्य होता है (५) आकारभेद से,जैसे घट के कारण मृत्पिण्ड और घट की आकृति का परस्पर भेद है (६) संख्याभेद से, जैसे तन्तु अनेक और पट एक है (७) कर्तृव्यापार के व्यर्थ होने से अर्थात् कार्य्य कारण एक हो तो कर्त्ता के व्यापार का क्या प्रयोजन ? यदि यह कहाजाय कि कार्य्य के होने पर भी उपयोगी होने के कारण कर्त्ता के व्यापार की आवश्यकता है तो सदा ही व्यापार होना चाहिये, और दूसरी बात यह है कि यह नित्य है और यह अनित्य है ऐसा विभाग भी सत्कार्य्यवाद में नहीं होसक्ता, क्योंकि ऐसा मानने पर कार्य्य कारण की पृथक् सत्ता नहीं पाई जाती, यदि यह कहाजाय कि कार्य्य सत् ही था कारक व्यापार से केवल प्रकट किया गया इसलिये कर्त्ता के व्यापार की आवश्यकता है और नित्यानित्य का विभाग आविर्भाव तथा तिरो-भाव के अभिप्राय से बनसक्ता है ? यह शंका भी ठीक नहीं, क्योंकि एक कार्य्य का प्रकट होना दूसरे कार्य्य पर निर्भर करता है और दूसरा तीसरे पर, इस प्रकार अनवस्था दोष लगेगा, यदि दूसरे की आवश्यकता के बिना ही कार्य्य प्रकट होजाय तो सदैव कार्य्य की प्रतीति होनी चाहिये,और कार्य्य की उत्पत्ति मानने पर असत्कार्य्य वाद प्रसङ्ग लगेगा, इससे अतिरिक्त यह दोष है कि यदि कारक के व्यापार को दीपादिकों की भांति कार्य्य का अभिव्यञ्जक मानें तो घट के लिये जो कारक व्यापार है उससे करकादिकों की भी अभिव्यक्ति होनी चाहिये, क्योंकि उभयवादी सिद्ध जो दीपादि अभिव्यञ्जक हैं उनमें यह नहीं देखाजाता कि घट के लिये रक्खा

हुआ दीपक दूसरी वस्तुओं का प्रकाश न करे, असत्कार्य्य की उत्पत्ति मानने पर ही कर्त्ता का व्यापार अर्थ वाला होसक्ता है अन्यथा नहीं, इसलिये असत्कार्य्यवाद का मानना ही ठीक है, यदि यह कहो कि नियत कारण से उत्पन्न होना सत्कार्य्यवाद को सिद्ध करता है तो यह भी ठीक नहीं, क्योंकि उसी कारण में एक विशेषशक्ति है जिससे नियत कारण का नियम बनसक्ता है, ननु—असत्कार्य्यवादी के मत में भी कर्त्ता का व्यापार व्यर्थ है, क्योंकि जब उत्पत्ति से प्रथम कार्य्य विद्यमान ही नहीं तो फिर कर्त्ता किसके लिये प्रयत्न करे, यदि कहो कि बिना ही कार्य्य मे कारक का व्यापार अर्थ वाला होसक्ता है तो तन्तुओं के व्यापार से भी घट की उत्पत्ति होजानी चाहिये ? उत्तर—जो कारण जिस कार्य्य के उत्पन्न करने की शक्ति रखता है उसी कारण में क्रिया करने से वह कार्य्य उत्पन्न होता है, इसलिये तन्तु व्यापार से घट उत्पन्न नहीं होसक्ता, इस विषयमें अद्वैतवादियों का कथन है कि कारण से कार्य्य भिन्न नहीं कार्य्य का कारण से भिन्न प्रतीत होना केवल अविद्या से है, इसलिये जैसे अपने कारण मिट्टी से घटादि पदार्थ भिन्न नहीं केवल व्यवहार मात्र भिन्न प्रतीत होते हैं और वह प्रतीति मिथ्या है कारण रूप मिट्टी ही सत्य है, इसी प्रकार निर्विशेष सन्मात्र कारणरूप ब्रह्म से यह सम्पूर्ण प्रपञ्च भिन्न नहीं, भिन्न प्रतीति मिथ्या है केवल कारणरूप ब्रह्म ही सत्य है, इसलिये कारण से भिन्न कार्य्य नहीं, इस प्रकार कार्य्यकारण का अभेद है, और शुक्तिरजतादिकों की भांति घटादि कार्य्यों की प्रसिद्धि न पायेजाने के कारण दृष्टान्त की उपपत्ति नहीं होसक्ती, यह कथन इसलिये ठीक नहीं कि युक्ति से घटादि कार्य्यों में मृत्तिका ही सत्य सिद्ध होती है घटादिकार्य द्रव्य नहीं,क्योंकि उनका शुक्तिरजत

की भांति बाध पायाजाता है अर्थात् जिसप्रकार रज्जु आदिक अधिष्ठान में सर्प्पादिक भ्रमकाल में प्रतीत होते हैं परन्तु अधिष्ठानरूप रज्जु आदि पदार्थों की स्थिति दोनों अवस्थाओं में समान बनी रहती है इसी प्रकार कार्यावस्था में भी ज्यों का त्यों बना रहने से मृत्तिकारूप कारण द्रव्य ही सत्य है रज्जुसर्प्पादिकों की भांति कार्य्यकाल में प्रतीयमान घटादि कार्य्यद्रव्य मिथ्या हैं, इसलिये दृष्टान्त की अनुपपत्ति नहीं होसक्ती।

दूसरी बात यह है कि बिनाश न होने से आत्मा सत्य और उपलब्धि न होने से शशशृङ्गादि असत्य कहलाते हैं पर जिसकी उपलब्धि, विनाश दोनों पायेजायं वह सत् असत् से विलक्षण होने के कारण अनिर्वचनीय होता है और जो अनिर्वचनीय हो वह शुक्तिरजत की भांति मिथ्या होता है, कार्य्य के मिथ्या होने में और तर्क यह है कि कार्य्य को उत्पन्न हुआ करता मृदादि कारण अपने आप अविकारी रहता है वा किसी विकारविशेष को प्राप्त होता है? यदि प्रथमपक्ष मानें तो सर्वदा कार्य्य की उत्पत्ति होनी चाहिये और यदि दूसरा पक्ष मानें तो उस विकार विशेष को विशेषान्तर की आवश्यकता बने रहने से अनवस्था होगी, यदि यह कहो कि अविकारी कारण ही देशकालादि निमित्तविशेष के सम्बन्ध से कार्य को उत्पन्न करता है तो भी ठीक नहीं क्योंकि वह सम्बन्ध प्रथम ही विद्यमान था फिर कार्योत्पत्ति के पूर्वक्षण में भी क्यों नहीं उत्पन्न होता, इससे स्पष्ट है कि कार्य्य वाणी का आरम्भमात्र है।

ननु–मिट्टी, सुवर्ण, दुग्धादिकों से घट, भूषण, दधि आदिकों की उत्पत्ति देखी जाती है परन्तु प्रतीति वाले देश काल वस्तु में बाध नहीं पाया जाता, इसलिये अनिर्वचनीयवादी की

उत्पत्ति अवश्य माननी चाहिये ? यह आशङ्का इसलिये ठीक नहीं कि इसका विकल्प से खण्डन होजाता है, वह विकल्प इसप्रकार है कि सुवर्णमात्र स्वस्तिकादि कार्य का आरम्भक है अथवा रुचकादि का आश्रय सुवर्णादि आरम्भक है ? सुवर्णादि आरम्भक नहीं कहेजासक्ते, क्योंकि सुवर्णादि से भिन्न कार्य्य की सत्ता का कथन सर्वथा असम्भव है, यदि यह कहाजाय कि सुवर्ण से भिन्न रुचकादि कार्य्य वस्तुतः उपलब्ध नहीं होते, यह कथन भी समीचीन नहीं, क्योंकि रुचकादि में भी सुवर्ण की प्रतीति निराबाध पाई जाती है वस्त्वन्तर की नहीं, और जो यह कहा था कि कार्य्य कारण में भिन्न२ बुद्धि होने पर वह दोनों स्वतन्त्र पदार्थ हैं ? इसका उत्तर यह है कि भिन्न २ प्रकार की बुद्धि शुक्ति रजतादिकों की भांति बनसक्ती है इससे कार्य्य की सत्यता सिद्ध नहीं होती और नाही रुचकादि स्वस्तिकादिकों के आरम्भक होसक्ते हैं, क्योंकि वस्त्र में तन्तुओं की भांति स्वस्तिक में रुचक उपलब्ध नहीं होता और तीसरा पक्ष इसलिये ठीक नहीं कि रुचक के आश्रय वाला सुवर्ण स्वस्तिक में नहीं पाया जाता, इस प्रकार के विकल्पों से सिद्ध है कि मृत्तिका, सुवर्ण आदि कारणों से अतिरिक्त कार्य्य की असत्यता पाये जाने के कारण ब्रह्म से भिन्न सम्पूर्ण जगत् मिथ्या है, अतएव ब्रह्मातिरिक्त वस्तुमात्र के मिथ्यात्व को सुगम रीति से समझाने के लिये मिट्टी आदि का कल्पित सत्यत्व आश्रयण करके कार्य्य को असत्य कहागया है वस्तुतः मिट्टी सुवर्णादि कारण भी घटादिकों की भांति ब्रह्मातिरिक्त सत्ता वाले न होने से मिथ्या हैं, "यह सब आत्मा का भाव है, वह सत्य है" "यहां नानापन कुछ नहीं" "वह मृत्यु से मृत्यु को प्राप्त है जो ब्रह्म में

नानापन देखता है" "जिस अवस्था में द्वैत होता है वहां एक दूसरे को देखता, सुनता है" "जहां इसका सब अपना आप है वहां कौन किसको देखे सुने" " ब्रह्म ही अपनी माया से अनेक रूप होगया है" इत्यादि श्रुतियों से भी ब्रह्मातिरिक्त सब मिथ्या पाया जाता है, इस वेदार्थ में यह शंका ठीक नहीं कि प्रत्यक्ष से कार्य्य की सत्यता पाई जाती है, क्योंकि उक्त प्रकार से कार्य्य का मिथ्यात्व सिद्ध है, और प्रत्यक्ष भी सन्मात्र की ही प्रतीति बतलाता है, यदि विरोध माना भी जाय तो आप्तोक्त होने के कारण जिसमें दोष की सम्भावना नहीं की जासक्ती ऐसा जो शब्द प्रमाण उसको अपने स्वरूप की सिद्धि के लिये प्रत्यक्षादिकों की आवश्यकता होने पर भी अपने विषय में प्रमा को उत्पन्न करने के लिये निरकांक्ष होने के कारण शास्त्र प्रमाण बलिष्ठ है, इसलिये कारण ब्रह्म से भिन्न सब मिथ्या है, यदि यह कहो कि प्रपञ्च मिथ्या होने के कारण जीव भी मिथ्या है? सो ठीक नहीं, क्योंकि ब्रह्म ही सब शरीरों में जीवभाव को अनुभव कर रहा है, जैसाकि 'ब्रह्म ने ही जीव होकर प्रवेश किया" "एक देव ही सब तत्वों में छिपा हुआ है" "उससे भिन्न अन्य कोई द्रष्टा नहीं" इत्यादि श्रुतियों से ब्रह्म का ही जीव बनजाना पाया जाता है, ननु-यदि ब्रह्म ही सब शरीरों में जीवभाव को अनुभव कर रहा है तो जैसे एक शरीर वाले जीव को यह प्रतीति होती है कि मेरे पाउं में पीड़ा है सिर में नहीं, इस प्रकार सब शरीरों के सुख दुःख का ज्ञान होना चाहिये, और ब्रह्म के ही सब स्थानों में जीव होने से बद्ध, मुक्त, शिष्य, गुरु, ज्ञानी, अज्ञानी

आदिकों की व्यवस्था न रहेगी, क्योंकि सब जीव ब्रह्म का स्वरूप हैं फिर कौन बद्ध कौन मुक्त कहाजाय ? इस प्रश्न का कईएक अद्वैतवादी यह उत्तर देते हैं कि ब्रह्म के प्रतिबिम्ब रूप जीवों के सुखित्व दुःखित्वादि धर्म हैं, जैसाकि एक मुख के प्रतिबिम्बों का छोटापन बड़ापन, मलीन तथा स्वच्छता आदि मणि कृपाणादि वश से प्रतीत होते हैं, ननु-"इस जीवरूप आत्मा द्वारा प्रवेश करके नामरूप को करूं" इत्यादि श्रुतियों से यह कथन कर आये हैं कि जीव ब्रह्म से भिन्न नहीं, फिर उपाधिभेद से व्यवस्था कैसे होसकेगी ? उत्तर-वस्तुतः ऐसा ही है परन्तु कल्पित भेद को मानकर सुख दुःख की व्यवस्था कही गई है, यहां पर प्रश्न यह होता है कि किसकी कल्पना ? शुद्ध ज्ञानस्वरूप ब्रह्म तो कल्पना शून्य होने के कारण उसकी कल्पना कथन करना तो सर्वथा असङ्गत है और जीवों की कल्पना में यह दोष है कि कल्पना हो तो जीवभाव बने और जीवभाव हो तो कल्पना बनसके, इस प्रकार परस्पराश्रयदोष लगने से दूसरा पक्ष भी समीचीन नहीं ? इसका उत्तर यह है कि बीजाङ्कुरन्याय की भांति अविद्या तथा जीवभाव अनादि होने के कारण परस्पराश्रयदोष नहीं आता, इसलिये जीवों की कल्पना मानने में कोई बाधा नहीं अर्थात् नानारूप वाली अवस्तुभूत अविद्या में गृह और स्तम्भ की भांति परस्पराश्रयादि दोष नहीं आते वास्तव में ब्रह्म से व्यतिरिक्त जीव स्वभाव से शुद्ध होने पर भी तलवार में प्रतिबिम्बित मुख श्यामतादि की भांति औपाधिक अशुद्धि से कल्पना बनसक्ती है, क्योंकि प्रतिबिम्ब गत श्यामतादि की भांति जीवगत अशुद्धि भी भ्रान्ति है, यदि ऐसा न मानें तो मोक्ष न बनसकेगा, और जीवों का भ्रमरूप प्रवाह अनादि

होने के कारण भ्रान्ति का मूल ढूंढना ठीक नहीं, अब आगे का पूर्वपक्ष अद्वैतवाद को न समझे हुए भेदवादियों की ओर से किया जाता है कि जीव को कल्पित स्वाभाविक रूप से अविद्या का आश्रय मानने पर ब्रह्म ही अविद्या का आश्रय सिद्ध हुआ और ब्रह्म भिन्न कल्पित आकार से अविद्याश्रय मानने पर जड़ ही अविद्याश्रय मानना पड़ेगा परन्तु अद्वैतवादी लोग चिद्रूप अचिद्रूप उक्त दोनों से पृथक् कोई आकार नहीं मानते, यदि यह कहाजाय कि कल्पिताकार विशिष्ट रूप से अविद्याश्रयत्व है तो ठीक नहीं, क्योंकि अविद्या से बिना अखण्डैकरस स्वरूप के विशिष्ट रूप की सिद्धि न होसकने के कारण उसके विशिष्टरूप को ही अविद्याश्रयाकार कथन कियागया है इसके अतिरिक्त यह भी है कि अद्वैतवादी लोग बन्ध मोक्ष की व्यवस्था सिद्धि के लिये अज्ञान को जीवाश्रित मानते हैं पर यह व्यवस्था जीव के अज्ञानी मानने पर भी नहीं बनसक्ती, क्योंकि यह लोग अविद्या के नाश को ही मुक्ति मानते हैं तब एक के मुक्त होने पर औरों को भी मुक्ति होनी चाहिये, यदि यह कहाजाय कि अन्यों के मुक्त न होने के कारण अविद्या बनी रहती है तो एक की भी मुक्ति नहीं होनी चाहिये, क्योंकि बन्ध का कारण अविद्या बनी हुई है, यदि यह कहें कि प्रत्येक जीव की अविद्या पृथक् २ है जिसकी अविद्या का नाश होगा वह मुक्त होजायगा और जिसकी बनी रहेगी वह बद्ध रहेगा, यहां प्रष्टव्य यह है कि यह भेद स्वाभाविक है वा अविद्या कल्पित ? स्वाभाविक इसलिये नहीं कहसक्ते कि जीवों के भेद के लिये जो अविद्या कल्पना कीगई है वह व्यर्थ होजायगी, यदि यह कहो कि वह भेद अविद्या कल्पित है तो प्रश्न यह है कि भेद की कल्पना करने वाली अविद्या ब्रह्म

की है वा जीवों की ? यदि ब्रह्म की है तो हमारी ही बात माननी पड़ी कि एक अविद्या के नाश होने से सब की मुक्ति होजानी चाहिये, यदि जीवों की है तो प्रथम जीव हों तो उनके आश्रित अविद्या बने और अविद्या हो तो जीवों का भेद होसके यह इतरेतराश्रय दोष सर्वथा अवार्य बना रहेगा, यदि यह कहाजाय कि बीजांकुर की भांति उक्त दोष नहीं होसकता अर्थात् जैसे बीज से अंकुर और अंकुर से बीज इसप्रकार अविद्या से जीव और जीव से अविद्या होना सम्भव है, यह इसलिये ठीक नहीं कि बीजांकुर न्याय में तो जिस बीज से जो वृक्ष होता है उससे फिर वही बीज नहीं होता किन्तु दूसरा होता है और यहां तो जिस अविद्या से जो जीव कल्पना किये जाते हैं उन्हीं जीवों को आश्रय करके वह अविद्यायें रहती हैं, यदि कहाजाय कि बीजांकुर न्याय की भांति पूर्व २ जीवाश्रित अविद्याओं से उत्तर २ जीवों की कल्पना हो सक्ती है, ऐसा मानने से जीव अनित्य होगा और बिना किये हुए कर्म का फल मिलना और किये हुए का न मिलना यह दोष भी आयेगा, इसी बात से ब्रह्म में भी पूर्व२ जीव के आश्रय से उत्तर२ जीव की कल्पना का खण्डन समझ लेना चाहिये, अविद्या को प्रवाहरूप अनादि मानने पर तत्कल्पित जीव को भी प्रवाहरूप से अनादि मानना पड़ेगा, इसलिये मोक्ष पर्य्यन्त जीवभाव का नित्य रहना अद्वैतवाद में सिद्ध नहीं होसक्ता और जो अविद्या को अनिर्वचनीय मानकर उसमें इतरेतराश्रयादि दोषों को भूषणरूप माना है इसमें वक्तव्य यह है कि यदि ऐसा मानाजाय तो मुक्त पुरुषों को और परब्रह्म को भी अविद्या ग्रस लेगी, यदि कहो कि वह शुद्ध और विद्यास्वरूप हैं इसलिये उनको अविद्या नहीं लगसक्ती तो फिर किस तर्क से शुद्ध चेतन को अविद्या आश्रयण करसक्ती है

और उक्त व्यक्तियों से जीव को भी आश्रयण नहीं करसकती क्योंकि अविद्या के लगने से प्रथम वह भी शुद्ध था, इसके अतिरिक्त प्रष्टव्य यह है कि तत्वज्ञान के होने पर अविद्या नाश से जीव का नाश होता है वा नहीं ? यदि होता है तो स्वरूप नाश रूप मोक्ष हुआ, यदि नहीं होता तो अविद्या के नाश होने पर भी मोक्ष नहीं होगा अर्थात् ब्रह्म स्वरूप से भिन्न जीव ज्यों का त्यों ही बना रहा फिर ब्रह्मात्मैकत्वरूप मोक्ष का मानना ठीक नहीं, क्योंकि अद्वैतवादियों के मत में ब्रह्म से पृथक् जीव बने रहने से मुक्ति नहीं होती, और जो यह कहागया है कि मणि तलवार और दर्पण आदिकों में जैसे मुख का मैलापन वा शुद्धपन अथवा छोटापन आदि प्रतीत होता है इसी प्रकार उपाधिभेद से शुद्धि अशुद्धि आदिकों की व्यवस्था होसकेगी, यहां विचारणीय यह है कि अल्पत्व, मलिनत्वादि जो उपाधिकृत दोष हैं वह कब नाश होंगे ? यदि कहाजाय कि तलवार आदि उपाधियों के हट जाने से, तो प्रश्न यह है कि वह अल्पत्वादि प्रतिबिम्ब रहेंगे वा नहीं ! यदि रहेंगे तो जीव के बने रहने से मुक्ति न होगी, यदि मिट जावेंगे तो फिर भी जीव का नाशरूप ही मुक्ति हुई, और बात यह है कि जिसके मत में अपुरुषार्थ रूप दोषों की प्रतीति बन्ध और उन दोषों का नाश मुक्ति है उसके मत में प्रष्टव्य यह है कि औपाधिक दोषों की प्रतीति बिम्बस्थानीय ब्रह्म को है अथवा प्रतिबिम्ब स्थानीय जीव को वा किसी अन्य को है ? प्रथम दो विकल्पों में यह दृष्टान्त कि मलिनत्वादि दोष कृपाणादि उपाधि वश होते हैं नहीं घट सकते, क्योंकि ब्रह्म निराकार है उसका प्रतिबिम्ब नहीं होसकता, यदि दोषों का होना ब्रह्म में मानाजाय तो अविद्या का आश्रय ब्रह्म

माननां पड़ेगा और वह प्रकाशस्वरूप होने के कारण अविद्या का आश्रय नहीं होसकता, तीसरा विकल्प इसलिये ठीक नहीं कि ब्रह्म से भिन्न जीव कोई अन्य द्रष्टा नहीं, फिर प्रश्न यह है कि अविद्या की कल्पना करने वाला कौन है क्योंकि अविद्या जड़ होने के कारण स्वयं कल्पना नहीं कर सकती और जीव अपनी कल्पना इसलिये नहीं करसकता कि आत्माश्रय दोष का प्रसंग आता है, यदि यह कहा जाय कि शुक्ति रजतादिकों की भांति जीव अविद्या कल्पित होने के कारण ब्रह्म ही कल्पना करने वाला है तो ऐसा मानने पर ब्रह्म में अज्ञान आता है, यदि ब्रह्म में अज्ञान न मानें तो प्रश्न यह होगा कि ब्रह्म जीवों को जानता है वा नहीं ? यदि नहीं जानता तो ज्ञान पूर्वक सृष्टि नहीं रच सकता, यदि जानता है तो ब्रह्म में अविद्या बनी ही रही, क्योंकि अद्वैतवाद में विना अज्ञान से ब्रह्म में जानना नहीं होता, इस कथन से माया और अविद्या के विभाग का भी खण्डन समझ लेना चाहिये, क्योंकि विना अज्ञान से माया वाला ब्रह्म भी जीवों को नहीं देख सकता, यदि यह कहाजाय कि ब्रह्म की माया जीव दर्शन कराने की शक्ति रखती हुई जीवों के मोहन करने का हेतु होसकती है तब शुद्ध अखण्ड ब्रह्म के प्रति झूठ जीवों को दिखलाने वाली अविद्या ही माया नाम से व्यवहृत होती है अविद्या पृथक् वस्त्वन्तर नहीं, यदि यह कहाजाय कि विपरीत दर्शन का हेतु अविद्या है और ब्रह्म से भिन्न जो मिथ्या जगत् है इसको माया मिथ्या ही दिखलाती है इसलिये विपरीत दर्शन का हेतु न होने से माया को अविद्या नहीं कहाजासकता, यह बात ठीक नहीं, क्योंकि चन्द्रमा के एक जानने पर भी दो चांद ज्ञान का कारण अविद्या है, यदि मिथ्यादर्शन के हेतु को ही माया कहते

तो यहां भी उसको माया ही कहना चाहिये, यदि ब्रह्म अपने से भिन्नों को मिथ्या जानता है तो उनको मोहित नहीं करता, क्योंकि मिथ्या जानना दूसरे के भ्रम का हेतु नहीं होसक्ता, जैसाकि उन्मत्त पुरुष ओरों को मिथ्या जानता हुआ भ्रम उत्पन्न नहीं करसकता यदि यह कहाजाय कि अपुरुषार्थ अपरमार्थ दर्शन का हेतु अविद्या है और माया पुरुषार्थदर्शन का हेतु है इसलिये वह अविद्या नहीं, यह भी ठीक नहीं, क्योंकि दो चन्द्रज्ञान दुःख का हेतु न होने से अपुरुषार्थ नहीं और उसका हेतु अविद्या ही मानीजाती है, यदि यह कहाजाय कि माया पुरुषार्थ की कुछ हानि नहीं करती तो अद्वैतवादियों को ऐसा मानना चाहिये कि ब्रह्म का स्वरूप होकर माया सदैव बनी रहती है, यदि वह यह कहें कि माया के ऐसा बने रहने पर भी सिद्धान्त की कोई हानि नहीं तो उनका यह कथन ठीक नहीं, क्योंकि ऐसा मानने से उनके मत में द्वैतदर्शन रूप हानि स्पष्ट है, और वह जिन श्रुतियों को अद्वैत प्रतिपादक मानते हैं उनका विरोध भी अवेगा. यदि यह कहाजाय कि परमार्थ विषय में अद्वैत श्रुतियें हैं और माया मिथ्या है इसलिये अद्वैत श्रुतियों का उसके साथ विरोध नहीं ? इसका उत्तर यह है कि परिपूर्ण आनन्द ब्रह्म को मिथ्या माया का दर्शन और मायावाला होना विना अविद्या से नहीं बनसक्ता, और प्रश्न यह है कि मिथ्या माया से ब्रह्म का क्या प्रयोजन ? यदि कहाजाय कि जीवों को अज्ञानी बनाना प्रयोजन है तो ऐसे अज्ञानी बनाने में क्या अर्थ ? यदि यह उत्तर दियाजाय कि यह ब्रह्म का खेल है तो परिपूर्ण ब्रह्म को ऐसे खेल करने से किस आनन्द की कमी थी, इस प्रकार माया और अविद्या का विभाग सिद्ध नहीं होता, इसीलिये अद्वैतवादी ऐसा मानते हैं कि अनादि अविद्या संयुक्त ब्रह्म अपने में नानापन को देखता है, और जो यह कहा

गया है कि ब्रह्म में अज्ञान माननेवालों के मत में बन्ध मोक्षादिकों की व्यवस्था इसलिये नहीं बनसक्ती कि एक ही ब्रह्म के अज्ञान निवृत्त होने पर सब की मुक्ति होजायगी, यह भी ठीक नहीं, क्योंकि बद्ध मुक्त शिष्य आचार्य्य आदिकों की व्यवस्था कल्पित है, जैसे एक ही स्वप्नदर्शी पुरुष को सब प्रकार की कल्पना होती है, एक स्वप्नदर्शी पुरुष से रचे हुए शिष्य आचार्य्य आदि सब कल्पित होते हैं, इसलिये बहुत अविद्याओं की कल्पना करना ठीक नहीं, फिर जीव में अज्ञान मानने वालों के मत में बन्ध मोक्षादिकों की पारमार्थिकी व्यवस्था नहीं होसकती और अपरमार्थिकी तो एक की ही अविद्या से बन सकती है, इस विषय में इस प्रकार के अनुमान भी पाये जाते हैं, जैसाकि (१) जो मिथ्या है वह कल्पित होता है, इस नियम के अनुसार स्वप्नपदार्थों की भांति कल्पित होने के कारण बन्धमोक्षादिकों की व्यवस्था अविद्याकल्पित है ( २ ) इस शरीर की भांति शरीरत्व धर्मवाला होने के कारण अन्य शरीर भी मेरे आत्मा से आत्मा वाले हैं ( ३ ) चेतन होने से मैं ही ब्रह्म हूं जो पदार्थ मैं नहीं वह ब्रह्म भी नहीं, जैसाकि घट पट आदि पदार्थ, इत्यादि अनुमानों से सिद्ध है कि स्वपर भेद, बद्ध मुक्त व्यवस्था तथा शिष्याचार्य्यादिकों की व्यवस्था एक ही अविद्या से बनसक्ती हैं।

द्वैतवादी के मत में भी बद्ध मुक्तादिकों की व्यवस्था नहीं बनसकती, क्योंकि जो कल्प व्यतीत होचुके वह अनन्त हैं प्रति कल्प एक २ की मुक्ति हो तो भी सब की मुक्ति होना सम्भव है, इसलिये फिर कोई जीव ही न रहेगा तो बद्ध मुक्तादिकों की व्यवस्था तथा सृष्टि रचना का कार्य्य ईश्वर का न रहेगा, यदि यह

कहाजाय कि आत्मा अनन्त होने से अनन्तकाल में भी सारे मुक्त न होंगे इसलिये ईश्वर को सृष्टि रचने का काम ज्यों का त्यों बना रहेगा, इसमें प्रष्टव्य यह है कि आप अनन्त किसे कहते हैं? यदि कहो कि जिसकी गिनती न होसके उसको अनन्त कहते हैं तो बहुतों की अल्पज्ञों से गिनती न हो पर सर्वज्ञ ईश्वर तो सबकी गिनती करसकेगा, यदि वह भी गिनती करने में असमर्थ है तो सर्वज्ञ न रहेगा, यदि कहो कि उनकी संख्या न होने के कारण ईश्वर असंख्य को असंख्य जानता है अतः असर्वज्ञ नहीं ठहरता तो यहभी ठीक नहीं, क्योंकि जो भिन्न पदार्थ होते हैं वह संख्यारहित नहीं होसकते, इसमें अनुमान यह है कि जो भिन्न हो वह संख्या वाला होता है, इस नियम के अनुसार जिस प्रकार माष तथा सरसों के दाने भिन्न २ होने से संख्या वाले हैं इसी प्रकार भिन्न २ होने से आत्मा भी संख्यावाले हैं, यदि यह कहा जाय कि भिन्न होने के कारण जीवात्मा भी घटादिकों की भांति जड़ तथा नश्वर होंगे और ब्रह्म भी भेदवाला होने से अनन्त न रहेगा, क्योंकि अद्वैतवादियों के मत में भेदरहित को ही अनन्त कहते हैं और भेदवाद में वस्त्वन्तरों से विलक्षण होने के कारण ब्रह्म वस्तु परिच्छेदरहित है यहभी नहीं कहा जासकता, क्योंकि वस्तुओं में भिन्न होना ही वस्तुकृत परिच्छेद है, जो पदार्थ वस्तुकृत परिच्छेद वाला है वह देशकालकृत परिच्छेद वाला नहीं यह नहीं कहाजासकता, जैसाकि वस्तुकृत परिच्छेद वाले घटादि देशकालकृत परिच्छेदवाले देखेजाते हैं इसी प्रकार सब जीवात्मा तथा ब्रह्म वस्तुकृत परिच्छेदवाले होने से देशकाल परिच्छेदवाले भी अवश्य होंगे, और ऐसे होने पर "सत्यंज्ञानमनन्तं ब्रह्म" इत्यादि उपनिषद् वाक्यों के साथ विरोध तथा ब्रह्म और जीवों की उत्पत्ति विनाश का भी दोष लगेगा, क्योंकि कालपरिच्छेद

उत्पत्ति तथा विनाश का कारण है, इसलिये अपरिच्छिन्न ब्रह्म का वस्तुकृत परिच्छेद और ब्रह्म से लेकर चींटी पर्य्यन्त सम्पूर्ण जगत् और उसमें सुख दुःख आदिकों की व्यवस्था स्वप्नव्यवस्था की भांति अविद्या के स्वभाव द्वारा बन सकती है, इसलिये एक ही नित्य मुक्त स्वप्रकाश स्वरूप वस्तुपरिच्छेद रहित ब्रह्म अनादि अविद्या के कारण नाना प्रकार जगत् रूप हुआ प्रतीत होरहा है वास्तव में ब्रह्म से भिन्न जगत् सत्य नहीं इसीसे महर्षि व्यास ने यह सूत्र रचा है कि "तदनन्यत्वमारम्भणशब्दादिभ्यः"=जगत् और ब्रह्म एक हैं और कार्य्य केवल वाणी का आरम्भमात्र है, इस अद्वैतवाद का इस प्रकार खण्डन किया जाता है कि निराकार स्वप्रकाशस्वरूप ब्रह्म अनादि अविद्या के कारण तिरोहित स्वरूप हुआ अपने आप में जगत् को मिथ्या कल्पना करलेता है, यह बात निरंश ब्रह्म में नहीं बनसक्ती और नाही प्रकाश स्वरूप को अविद्या आच्छादन करसकती है, यह कथन कर आये हैं कि प्रकाशस्वरूप का अविद्या से ढ़कजाना मानना प्रमाण विरुद्ध है, और जो यह कहागया है कि कार्य्य शुक्तिरजत की भांति भ्रमरूप है, कारण ही सत्य है, यह बात तर्करहित होने से ठीक नहीं, और यह कथन कि कारण दोनों दशाओं में सत्य रहता है और घटादि पदार्थ कारणावस्था में नहीं रहते इसलिये कारण की सत्ता से अतिरिक्त कार्य्य की स्वतन्त्र सत्ता नहीं किन्तु कार्य्य मिथ्या है? इसका उत्तर यह है कि दूसरे स्थान पर देखे हुए पदार्थ का दूसरे स्थान वा काल में न होना मिथ्यात्व का प्रयोजक नहीं और नाही कार्य्य का उत्पत्तिविनाश मिथ्यात्व का साधक होसक्ता है अपितु वह अनित्यत्वमात्र का गमक है अर्थात्

जो पदार्थ जिस देश काल में प्रतीत हो उसी देश काल में उसका बाध पायाजाना मिथ्यापन को सिद्ध करता है, या यों कहा कि जो एक देश में हो दूसरे में न हो और एक काल में हो दूसरे काल में न हो वह अनित्य होता है मिथ्या नहीं और यह बात अनुमान प्रमाण से भी स्पष्ट पाई जाती है, जैसाकि जो प्रातिभासिक न हो वह सत्य होता है, यह नियम है, इस नियम के अनुसार जिसप्रकार प्रातिभासिक न होने के कारण आत्मा सत्य है इसीप्रकार प्रातिभासिक न होने से घटादि पदार्थ भी सत्य हैं, प्रतीतिकाल से अधिककाल में न रहने वाले का नाम "प्रातिभासिक" है, जैसाकि शुक्तिरजतादि, और जो यह कथन किया है कि विकारी तथा अविकारी दोनों प्रकार के कारणों से कार्य्य उत्पन्न नहीं होता, यह ठीक नहीं क्योंकि देश कालादि सहकारी कारण होने से कार्य्य की उत्पत्ति देखी जाती है, और जो यह कहा है कि कारण में विकार न होने के समय में भी देशकालादिकों का सम्बन्ध वैसाही था और जब विकारी हुआ तब भी देशकालादिकों का सम्बन्ध वैसाही है, इस लिये विकारी तथा अविकारी दोनों प्रकार के कारणों को देश कालादि सहायता नहीं देसक्ते? इसका उत्तर यह है कि जिस समय कर्त्ता के प्रयत्न से कार्य्य विकारी हुआ उसी समय देशकालादिकों की सहायता कार्य्य का हेतु समझी जाती है, इसलिये देशकालादिकों की सहायता से विशेषता को प्राप्त होकर कारण कार्य्य को उत्पन्न करता है, इस तर्क में कुछ न्यूनता नहीं किञ्च कारण का जो कार्य्य के प्रति आरम्भक होना देखा जाता है वह किसी प्रकार छिपाया नहीं जासकता, और जो यह कहा है कि सुवर्णमात्र अपने कार्य्य का आरम्भक है वा लम्बा चौड़ा किया हुआ सुवर्ण अपने कार्य्य का

आरम्भक है? यह शंका इसलिये ठीक नहीं कि सुवर्णमात्र ही अपने कार्य्य का आरम्भक है सुवर्ण से भिन्न आकृतिवाले रुचकादि भूषणों के उपलब्ध होने तथा "यह सुवर्ण पिण्ड है" "यह सुवर्ण कण है" इसप्रकार कार्य्यकारण में पृथक् २ शब्दव्यवहार पायेजाने से स्पष्ट है कि कारण से भिन्न भी कार्य्य की सत्ता देखी जाती है, और कार्य्य को शुक्तिरजतादिकों की भांति मिथ्या कथन करना भी ठीक नहीं, क्योंकि ज्ञान से कार्य का बाध नहीं होता और नाही कार्य्यप्रतीति की कोई बाधक युक्ति पाईजाती है, इसलिये दोनों अवस्थाओं में सुवर्णादि कारणों की प्रतीति से रुचकादि कार्यों को मिथ्या सिद्ध करना केवल साहसमात्र है, श्रुति से प्रपञ्च का मिथ्या होना प्रथम ही खण्डन करआये हैं और जो पीछे अनुमान से सिद्ध किया था कि एक ही आत्मा से सब शरीर आत्मा वाले हैं, यदि ऐसा होता तो एक शरीर के सुख दुःख का अनुसंधान सारे शरीरों में होना चाहिये, जैसाकि योगसामर्थ्य से विलक्षण ज्ञान होने के कारण एक आत्मा को पूर्व शरीरों के सुख दुःख का अनुसन्धान देखाजाता है, यदि अहंकाररूप अन्तःकरण ज्ञाता होने के कारण एक के सुख दुःख का अनुसन्धान दूसरे को न होना मानाजाय तो उत्तर यह है कि शरीर इन्द्रियादिकों की भांति जड़ होने से अन्तःकरण ज्ञाता नहीं किन्तु आत्मा ही ज्ञाता हैं, इसलिये एकात्मवादी के मत में उक्त दोष तदवस्थ ही रहेगा, आत्मा का ज्ञाता होना पीछे सिद्ध कर आये हैं यहां पुनः कथन की आवश्यकता नहीं, और जो शरीरत्व, जड़त्व, कार्य्यत्व तथा कल्पितत्व हेतुओं से सब शरीरों को एकही अविद्या कल्पित कथन कियागया है वह भी अयुक्त है क्योंकि सिद्धान्त में ज्ञान से बाध न होने के कारण शरीरों

